॥ पञ्चममेकसूत्रं तदोकोधिकरणम् ॥५॥

१७. तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१॥

॥ षष्ठमेकसूत्रं रश्म्यधिकरणम् ॥६॥

१८. रश्म्यनुसारी ॥१॥

॥ सप्तमं त्रिसूत्रं निश्यधिकरणम् ॥७॥[1]

१९. निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥१॥

२०. अतश्चायनेपि दक्षिणे ॥२॥

२१. योगिनः प्रति स्मर्यते स्मार्ते चैते॥३॥

॥ इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थाध्याये म्रियमाणस्य फलविचारो नाम द्वितीयश्चरणः ॥

## ॥ तृतीयश्चरणः ॥

॥ प्रथमं चतुःसूत्रमर्चिराद्यधिकरणम् ॥१॥

१. अर्चिरादिना तत्प्रथितेः ॥१॥

२. वायुमब्दादविशेषविशेषाभ्याम् ॥२॥

३. तडितोधि वरुणः सम्बन्धात् ॥३॥

४. वरुणाच्चाधीन्द्रप्रजापती ॥४॥

---

१९. 'सम्बन्धात्' इति पठित्वा यावद्देहसूत्रांशं पृथक्सूत्रत्वेन पठन्ति माध्वाः।

२१. 'प्रति' इति शाङ्करभास्करभैक्षवपाठः।

२. 'वायुशब्दात्' इति माध्वःपाठः।

४. 'नव्यमपि सूत्रं केचन निवेशयन्ति'इत्यत्र 'वरुणाच्च'इत्यादि नितान्तस्फुरदेव श्रीवल्लभसूत्रमेव निदर्शनमिति ब्रह्मसूत्राणां बहुकर्तृकत्वं सिसाधयिषुर्यत् कश्चिदाह तदसदेव। श्रीवल्लभैर्नैवेदं सूत्रं नव्यं न्यवेशि। 'वरुणादधीन्द्रप्रजापती' इति शाङ्करभाष्ये, 'वरुणादुपरीन्द्रादिर्निवेशयितव्यः' इति रामानुजभाष्ये 'इन्द्रप्रजापती उक्तस्थानाद्वरुणादधि निवेशयितव्यौ' इति निम्बार्कभाष्ये, 'वरुणलोकात् प्रजापतिलोकमिति कौण्डिन्यश्रुतिः'इति माध्वभाष्ये, 'तदनन्तरमिन्द्रप्रजापतिलोकाः'इति शैवभाष्ये, 'तत इन्द्रस्ततः प्रजापतिः'इति भैक्षवभाष्ये चैतत्सूत्राक्षराणां स्फुटतमोपलम्भात् स्पष्टार्थत्वेनैव चास्य सूत्रस्य शङ्करादिभिः 'स्थानान्तराभावात् पाठसामर्थ्याच्च'इत्येवम्भाष्यकरणाच्चेतिदिक् ॥

---

१. प्रदीपकाराधिकरणसङ्ग्रहकारमतेनेदं षष्ठमेवाधिकरणम्। भावप्रकाशिकाकाररश्मिकारमतेन चेदं सप्तममधिकरणम् ॥

द्वितीयं त्रिसूत्रमातिवाहिकाधिकरणम् ॥२॥
५. आतिवाहिकास्तल्लिङ्गात् ॥१॥
६. उभयव्यामोहात् तत्सिद्धेः ॥२॥
७. वैद्युतेनैव ततस्तच्छ्रुतेः ॥३॥

तृतीयमष्टसूत्रं कार्याधिकरणम् ॥३॥
८. कार्यं बादरिरस्य गत्युपपत्तेः ॥१॥
९. विशेषितत्वाच्च ॥२॥
१०. सामीप्यात्तु तद्व्यपदेशः ॥३॥
११. कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥४॥
१२. स्मृतेश्च ॥५॥
१३. परं जैमिनिर्मुख्यत्वात् ॥६॥
१४. दर्शनाच्च ॥७॥
१५. न च कार्ये प्रतिपत्त्यभिसन्धिः ॥८॥

चतुर्थमेकसूत्रमप्रतीकाधिकरणम् ॥४॥
१६. अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥१॥

पञ्चममेकसूत्रं विशेषाधिकरणम् ॥५॥
१७. विशेषं च दर्शयति ॥१॥

इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थेऽध्याये गन्तृतः फलविचारो नाम तृतीयश्चरणः ॥

## ॥ चतुर्थश्चरणः ॥

प्रथमं चतुःसूत्रं सम्पद्याविर्भावाधिकरणम् ॥१॥
१. सम्पद्याविर्भावः स्वेन शब्दात् ॥१॥
२. मुक्तः प्रतिज्ञानात् ॥२॥
३. आत्मा प्रकरणात् ॥३॥
४. अविभागेन दृष्टत्वात् ॥४॥

द्वितीयमष्टसूत्रं ब्राह्माधिकरणम् ॥२॥
५. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥१॥
६. चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥२॥

---

५. 'आतिवाहिकः' इति माध्वः पाठः ।

६. इदं सूत्रं भास्कररामानुजनैम्बार्कशैवा न पठन्ति ।

१५. 'प्रत्यभिसन्धिः' इति रामानुजशैवपाठः ।

१६. 'उभयथादोषात्' इति शाङ्करभास्करभैक्षवपाठः । 'उभयथा च दोषात्' इति रामानुजमाध्वशैवपाठः ।

१. 'अविहाय' इति माध्वः पाठः ।

६. 'चितिमात्रेण' इति भास्करमाध्वशैवपाठः । 'तदात्मकत्वात्' इति च रामानुजनैम्बार्कमाध्वशैवभैक्षवःपाठः ।

७. एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥३॥
८. सङ्कल्पादेव च तच्छ्रुतेः ॥४॥
९. अत एव चानन्याधिपतिः ॥५॥
१०. अभावं बादरिराह ह्येवम् ॥६॥
११. भावं जैमिनिर्विकल्पामननात् ॥७॥
१२. द्वादशाहवदुभयविधं बादरायणोतः८

तृतीयं द्विसूत्रं तन्वभावाधिकरणम् ॥३॥

१३. तन्वभावे सन्ध्यवदुपपत्तेः ॥१॥
१४. भावे जाग्रद्वत् ॥२॥

चतुर्थं द्विसूत्रं प्रदीपाधिकरणम् ॥४॥

१५. प्रदीपवदावेशस्तथा हि दर्शयति॥१॥
१६. स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥२॥

पञ्चमं षट्सूत्रं जगद्व्यापाराधिकरणम् ॥५॥

१७. जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१॥
१८. प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥२॥
१९. विकारावर्ति च तथा हि स्थितिमाह ॥३॥
२०. दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४॥
२१. भोगमात्रसाम्यलिङ्गाच्च ॥५॥
२२. अनावृत्तिः शब्दादनावृत्तिः शब्दात् ।६

इति श्रीमत्कृष्णद्वैपायनविरचितेषु तत्त्वसूत्रेषु फलाख्ये चतुर्थेध्याये प्राप्तफलस्य फलविचारो नाम चतुर्थश्चरणः ॥

---

८. 'एव तु' इति शाङ्करभास्करशैवभैक्षवपाठः । 'एव तच्छ्रुतेः' इति रामानुजनैम्बार्कपाठः ।

९. चकाररहितो भैक्षवः पाठः ।

११. 'अविकल्पमननात्' इति भास्करपाठः ।

१३. 'तन्वभावे' इति सर्वेप्येकदेशिनः ।

१७. 'प्रकरणात्'इत्यादिसूत्रांशं पृथक्सूत्रत्वेन पठन्ति माध्वाः ।

१८. 'नेति चेन्न' इति भास्करनैम्बार्कपाठः ।

१९. 'स्थितिम्'इत्यादिसूत्रांशमुत्तरसूत्रेण योजयन्ति माध्वाः । 'विकाराद् वर्ति' इति भैक्षवः पाठः ।

२१. 'साम्यम्' इति भास्करपाठः

॥ समाप्तानि श्रीमत्कृष्णद्वैपायनविरचितानि तत्त्वसूत्राणि ॥